काव मे३ वाजजिद्विश्वा२ धना३नी३ काव मा१ੴ सूर्य्यस्य बृहतो३ बृहन्ना३धी३ न्याय्योवोद्वद्वार्गवं सामराजे हा२उ हो२वा३ हा३यिहो३ श्रा३र्यो३ ना३सा३ परं वा चतुरक्षरं पूर्वनवमतन्त्र एव सिमानां निषेध उत्तरयोर्द्व्यक्षरौ चतुरक्षरौ वा वैधृतं वासिष्ठं लौशयोः पूर्वमनादेशे प्रवद्वार्गवं याम मा३ इया३ वृषा च स्वारमनादेशे महस्तं धेनु चा३रू३णा१२३यिचा३ इन्द्रस्यापामीवं वायोरभिक्रन्दो द्रा१ वी३णा२स्वा३ पूर्वं वा पदं हावाञ्जेति शार्गमर्कपुष्पयोः पूर्वमनादेशे पौष्कलं श्रुष्टा३यि शौक्तं शा३यि शा३श्रो२वा३ हौ चेच्छा३यिषा३ कार्णश्रवसं शा३यि श्रुनं हवौ १ स्वदया सुज्ञानमग्ने२ वा३ चा२ श्रातीषादीयं पवमा२ना२ सफं मंहा३यि वाचस्साम वा३ना१प्रा३क्षा३ੴ शंकु वा३ यिश्वा३ वा३ सू३ तत्सीदन्तीयं भरद्वाजस्य लोम सो२३मा३स्तद्दीर्घं गायत्रपार्श्वं क्रीऽ१डा३नू३र्मी२ सन्तनि-नस्त्रयः प्रस्तावसदृशाः ९

यद्योजोरूपे तृतीये दशाक्षरो ह्स्वा बृहदोपशा न्याय्यो वैरूपे पददैवते व्यत्यस्याश्वायाः पुरस्तात्स्तोभा श्रन्तरिक्षं पिबा व्यरिष्टं पिबा देवस्थानं तस्य तृतीये चतुरक्षर मन्त्यੴ सस्तोभੴ शन्न श्राथर्वणमुत्तरयोश्चतुरक्षरौ पुरस्तात्स्तोभौ बृहत्त्वामित्स्वादिस्वाशिरामर्कौ धर्त्तेति दीर्घतमसोऽर्कौ मरुताੴ सੴस्तोभो श्रग्नेरर्क श्राज्यदोहान्यृषभरैवते तृतीये मध्यमोऽभ्यासः शाक्वरे चतुर्थੴ सस्तोभ मान्धान्तास्त्रयोऽतीषङ्गे धर्त्तेतिपदस्तोभा द्वा-दशनिधनाः स्तोभैः पूर्वेण वाद्ये परेणान्त्ये विभाग्यस्त्वेव प्रागन्त्यात्पदभाज इडे चाभितः प्रथमे युजश्चोत्तरे शेषे पदमध्ये उत्तमेऽयुजश्चत्वारि त्र्यक्षराणि युजस्तच्छेषः पदमिडा च चतुरक्षरशो वायुजौ द्वैधमितरौ सੴसर्पाणि सर्पसामानि लिङ्गतो नियमस्त्वं तूर्यस्त्रिषन्धि परो वा वामदेव्यसदृश एकवृषा त्रिरुक्ताद्यमो वान्ता न च कृष्टैकवृषस्योपायवन्तः स्तोभाः पदानां निधनत्वाद्रेवती तूत्तरयोश्चतुरक्षरावुच्चा शाक्वरवर्णं तस्योत्तमायाੴ षडक्षरः स्तोभान्तो नित्यवत्सास्वतीषङ्गवत्पञ्चाक्षरो रथन्तरे सप्तहੴ सामनी त्रया-णामाद्ये कया पञ्चनिधनं वामदेव्यं पिबा वैराजं तस्य तृतीये मध्यमो-ऽभ्यासस्तोभो विभाग्यं वा १०

द्वन्द्वाद्ये प्राणापानौ पञ्चमषष्ठे व्रतपक्षावुप त्वा बलभिदी भर्गयशसी प्रसोमद

इति घर्मस्य तन्वी वार्षाहरे त्वमेतत्तौरश्रवसे यदिन्द्रशोत्तरेऽष्टाक्षरो नानापद्यो धेनुपयसी चतुर्थ्यां यशवापत्ययोरुत्तरयोः स्तोत्रीययोः सस्तोभे मध्यमे पदे आयुर्नवस्तोभे रायोवाजीयबार्हद्गिरयोः षडक्षरः स्तोभान्तः संकृतिनि चतुर्थे स्तोभाः पार्थुरश्मे प्रस्तावसदृशाः श्येने च भद्रश्रेयसोरष्टमैः स्तोभैः पञ्चमाष्टमैर्वा द्वौ चेद्वार्कजम्भे प्र व इन्द्रायेत्युत्तरं विभाग्यं नाके यामं परिमात्सु प्रथश्च वसिष्ठशफौ शुक्रचन्द्रे स्वराणि यज्ञायथाश्चत्वार्य्युत्तमे विभाग्यः ११

सत्रस्यर्द्धि चतुर्थमन्त्ये सोमव्रते सार्पराज्ञीष्वग्निमीडे यामं तस्य तृतीये कृष्णान्त इमा उ वामश्विनोर्व्रते गवामुत्तरे समं न्यायन्तीत्यपांव्रते अहोरात्रयोरुत्तरे राजनरौहिणे चतुर्थ्यन्ते इलान्दं पञ्चानुगानं विभाग्य-मविभाग्यं चेदाद्य उत्तमानाᳩ स्तोभानां मध्यमेन स्तोभेन प्रतिहार उत्तमस्यानुगानस्य षडक्षरस्तोभान्तो वसन्त ऋतुष्ठा यज्ञायज्ञीयं कया पुरुषव्रतमेकानुगानं लोकसमान्यश्यस्य साम प्रजापतेर्हृदयम् १२

शुक्रियाद्यमग्नेर्व्रतं भ्राजाभ्राजे विकर्णभासे महादिवाकीर्त्त्यं पञ्च तस्यात्मा स्तोभविभाग्यो द्विप्रस्तावं चैतस्मात्तस्याद्ये देवते विपरिहरेदाद्यन्तसमाधये तृचस्थाः षट् परिधयः प्राक् परिधिभ्यो धर्म्मरोचनमिन्द्रस्योत्तरं महानाम्न्यः सिमाः शक्वर्य्यो मह्या वचनाद् द्विप्रस्तावा द्विपदायाः प्रस्तुत्य शक्वर्य्याः प्रस्तौत्यूधसोऽतीषङ्गवदूर्ध्वं पुरुषात् षडक्षरञ्चैके स्तोभान्तं प्रस्तावं चाध्या-स्यापुरीषपदेषु पुरीषपदशेषाणि निधनान्याचार्याः स्वरितान्तानि यथाधीतं तेषु पाञ्चविध्यं चेद्धोयिकाराद्वागन्तो वागतः १३

इति उपग्रन्थसूत्रे चतुर्थः प्रपाठकः । ग्रन्थश्च समाप्तः

Satyavrata Sāmaśhramī, ed., "Sāmavedīyam Upagranthasūtram," *Uṣhā* 4, Calcutta, 1897, cited by Gonda, Jan, in *The Ritual Sūtras* p. 537.

# पञ्चविधसूत्रम्

## प्रथमः प्रपाठकः

### प्रथमा खण्डिका

प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः १ तत्पाञ्चविध्यं स्मृतं व्याख्यास्यामः २ ओंकारहिंकाराभ्यां साप्तविध्यम् ३ अवसानं पूर्वं प्रस्ताव आद्योत्पत्तिषु ४ स्वादीन्दुःपप्रारेवत्यादीनि ५ किं यदिन्द्रेन्द्रमा ६ वैधेषु तु विधैव नाद्यमवसानम् ७ इदंते शन्नो वित्वद् असाविप्रभृतीनि ८ आनोमि कदा प्रत्युग्र त्यमू द्वितीये प्रतिसाम विधाविकाराः ९ निधनवती तु स्तोभपर्वोपायिनी १० जातःपरेण सौमित्रंधर्मविधर्मायावीती पुना परीतोऽयाप पञ्चनिधनो-दुत्यंकश्यपपुच्छऋषभादीनि च ११ निवृत्तानि नकि तिस्रः परीत इन्द्रायसन्तन्यतीषङ्गस्वादोः श्येनादिषु पूर्वावसानप्रस्तावानि १२ सर्वासु पूर्वमित्येके कईं शन्नो वित्वत्प्रभृतीनि १३ द्विविधे पादे पूर्वोभे वा वृषाप त्वावत इन्द्रायेन्दो प्रधन्वा सव् इन्द्रामिन्द्रं सघायस्तेऽचिक्र तत्तद् आद्या धर्तायाम् १४ पूर्वं चेदपदान्त्यं सामपर्व सदृशोत्तरमाश्वा यज्ञातृतीये प्रासो उपह्वरे वयम्यादौ हुवे होइ य एक इद्वारान्तो वा चन्द्रमाद्य उच्चाद्वितीये द्वादशाक्षरो वा स्वादिप्रथम इन्द्रायेन्दवा ते दक्षं तं वः सैतमुत्यं वृषके चातूऔहो १५

इति पञ्चविधसूत्रे प्रथमप्रपाठके प्रथमा खण्डिका १

### द्वितीया खण्डिका

सकृदावत्तौ पदविभाग्यमयंपू प्रोअया कश्यपद्वितीयेऽभित्वा १ अनुदूह्या पादगीतिरन्यत्र । त्रातारं प्रभृतीनि । सखेन्दुरेषस्य २ एष ब्रह्मौ पर्व विभाग्यम् । इन्द्रोवि द्व्यक्षरः ३ त्र्यक्षर उत्तरे ४ उपोषुद्वितीय एकाक्षरोऽष्टाक्षरो वा ५ अर्षेति पर्व पादो वा ६ अपघ्नन् पेति स्वारान्तः ७ इन्द्रम चतुर्थेऽष्टादशाक्षरः ८ रैवतऋषभे षट्त्रिंशत्

९ वैराजे तृतीयान्तः १० संकृतौ पर्व पादो वा ११ वाचोद्वितीये चत्वार्यष्टौ वा १२ राथन्तरस्त्रिरुक्तं चेलान्दाद्ये १३ कश्यपग्रीवा-हृदयेडानां संद्वारेषु १४ देवव्रतेषु नमोऽन्तः सर्वत्र १५ निह्नवे त्रि-रुक्तम् १६ परे चाष्टौ १७ दिवाकीर्त्य आदावुपायान्तः १८ आत्मनि विधान्तः १९ समैरयेष्वष्टाक्षरः २० आदित्यात्मनि चित्रमन्तः २१ चक्षुष्येकाक्षरो द्वे चेद् २२ वचनम् २३ उन्नये त्रिरुक्तम् २४ महानाम्न्यो द्विप्रस्तावाः २५ द्विपदायां शाक्वरे च २६ अध्यास्यायां जारा २७ पुरीषपदेषु च । पुरीषपदेषु च २८

इति पञ्चविधसूत्रे प्रथमप्रपाठके द्वितीया खण्डिका

## तृतीया खण्डिका

उत्तमपादादौ पर्व प्रतिहारः स न्याय्यः १ बृहद्रथन्तरयोश्च निदर्शनात् । नाइहोतासा तपारमादीनि २ तदादि चेदनेकं प्रागुपायात्पर्वणां विकल्पोऽवान्तानाम् ३ अग्नाइ रा३था३म् कया २३ शचाइ द्वा-इषस्ताराऽ२ न्याय्यस्य ४ अवान्तानामिति कस्मात् । सहो वा मयो वा ५ पूर्वं चेदवृद्धान्त्यं सह तेन वारातेर्ध्वमुपवापृण्ध्वं प्रवायाँ होतामज्योतींषि प्रभृतीनि ६ त्रिष्टुब्जगत्योश्चोपान्त्यं पदं वा ७ दिवेदि मातेराश्वमासूर्यादीनि ८ द्वे चेत्सदृशान्ते ९ हीष्यौ तृम्पे माध्वा वाग्नेसानीँहो यावा इन्द्रे च १० असंभवान्निधनपरे विशे वाइशेऽ२ । याँसादीनि । वृषावृषाऽ२ । द्रवा पाइ बा२ । क्षितो तायाऽ२ः । महाँहाइषा २ । जनुषा २ धा रा २ ११ स्तोभः परोऽविदूरात्प्रतिहारस्य १२ ये चोग्रमादीनि १३ अनेहिहुवेहुम्मा श्यैत और्णायवयोश्च १४ निवृत्तानि दिवस्पायौ १५ सखायआशंयद्वादीनि च १६ पूर्वश्च विधाया विदूरान्निधनाच्च कस्यनूतमिन्द्रंयदिन्द्राहमिमाउत्वावो-इपन्ययादीन्यौ होऽ१ अग्ने राथाऽ२३ मौहौहोऽ१ इन्दूराऽ १ इन्द्राऽ२ ओइकारो वृत्राण्योजिष्ठं पवस्वासोतेति च १७

इति पञ्चविधसूत्रे प्रथमप्रपाठके तृतीया खण्डिका ३

## चतुर्थी खण्डिका

प्रतिहारसदृशं चाप्रस्तावो निधनवतीषु न चेदुद्गीथादिर्नकितिस्त्रः-प्रभृतीनि १ अनुद्गीथादिरिति कस्मात् २ प्रव इन्द्रैष ब्रह्मा ३ सौमित्रादीनि स्तोभविभाग्यानि ४ भूयिष्ठपदसदृशगीतानि विभाग्यानि ५ आद्यन्तयोस्तु विकारो नान्यत्वकरः ६ अक्षरेण चौनाधिक्यम् ७ तेषूपान्त्यः पादगीतिरिदंतेप्रभृतीनि ८ ऋक्समे द्वैधमुत्तमं बहिर्निधने ९ कदाग्निमीडे न्याय्यस्य १० त्रैधमन्तर्निधने गोषाताविकोशं न्याय्यस्य ११ त्रिपदास्वत्यृचमावृत्तास्वन्त्या पादगीतिः १२ शन्नोयद्वीकयानासु प्रिये शुक्रचन्द्रयोः सर्पराज्ञीष्वानन्दप्रतिनन्दयोरिन्द्रस्य रोचने १३ अन्ये चेदभ्यासः प्राङ्गिनधनादन्त्ययोः पदयोर्विकल्पोद्रिवो वचो राजा तुविद्युम्नम् १४ कृत्स्नेऽभ्यास उत्तरेऽन्त्यधर्मश्चक्राणाओऽ२३ सूनूँसत्याऽ ३१२३ उद्वँशाऽ २३४ मी १५ एष न्यायोऽसप्तिसामपर्व । यजिष्ठमृञ्जसे ३ हाइ योस्याऽ ३ हाइ त्वाँसाऽ२३सुनूऽ३ँहोइ । सत्योऽ२३४ हा याजाऽ३हाऽ३ग्माऽ३ याइ १६

इति पञ्चविधसूत्रे प्रथमप्रपाठके चतुर्थी खण्डिका ४

## अथ पञ्चमी कण्डिका

अथानुक्रमणं विकल्पार्थम् १ स्मृतानां च २ अस्य या२३ज्ञा ३ द्वौ चेदस्तोभौ ४ विधा वा ५ एवं सर्वेषु वैधेषु येषूत्तमपादाद्यन्त्या विधा प्रस्तावश्चान्यस्त्रयो विकल्पा होताम दिवि सं यद्वाहि । प्रहोत्रे पादु भद्रं भद्रमामन्द्रैर्ब्राह्मणादीनि च ६ इन्द्रमित्साकं लक्षणशेषे यावद्वचनः ७ समिद्धस्तोभान्तः ८ स्तुषे मित्रमिव प्राऽ२३याम् ९ तस्य निर्योक्ता यदुद्गीथाद्वर्षीयान् १० तस्माज्जरत्पर्वाग्नायेऽ३ ११ मनोभिः सम्राजन्ताम् १२ एका चेदाश्वा प्रस्तावो द्विप्रतिहारम् १३ सम्रा-

जन्तामित्युत्तमे १४ वान्तो वा १५ उहुवादिर्वा पदान्तः १६ इहाहेति वा स्तोभावगातॄणां तस्य नियोक्ता १७ होऽ२३४र्तियाः १८ असंभवो वाग्नाद्वितीयपादादौ १९ परं वा चतुरक्षरमग्निस्ति भिन्धिसदसोऽसावि दाऽ३ सा३म् २० ऊर्जां पता चतासृभा इति च स्तोभान्तौ २१ पाहि हा वा २२ आजातासौ द्विःकृष्टान्तः २३ कायमा द्वितीये तृतीयः पादो होइकारान्तः २४ ओइ प्राना ओ२३४ वा २५ द्वौ चेत् स्तोभादी द्व्यक्षरम् २६ पवस्वासोतेति च २७ वासाऽ३ उवा २८ पूर्वा वा विधा २९ ओहुवाइशूऽ२३४ षा ३० परो वा पूर्वं वा ३१ उष्णिद्धवतिक्रान्तो न्याय्यः ३२ पूर्वेषां विकल्पो महाऽ२३ होये नाऽ२३ वेऽ२३ ३३ एष न्याय्यः ३४ अस्माइ देहि जातवेदः ३५ श्रुधियेति वा ३६ हव्येति न तस्य ३७

इति पञ्चविधसूत्रे प्रथमप्रपाठके पञ्चमी खण्डिका ५

अथ षष्ठी खण्डिका

शंयत् । हा । औ३होइ । गाऽ२३४ वाइ १ इन्द्रा औऽहो२३४ । ग्राइ २ येषामिन्द्रोयुवाइहा । ऊवाइ । ऊवो२३४ वा ३ न्याय्यो वा षडक्षरः ४ इहान्तो वा ५ नियामञ्चाइ । त्रमा२र्ञ्जा २३४ ताइ ६ नारमोइ । नृ । षाहमोऽइ ७ ओन्तस्त्र्यक्षरश्चतुरक्षरो वा ८ नरनृषाहंमा ९ नरंनृषाहम् । मा५ँहिष्ठाम् १० यवाशा२३ इराः ११ यवाशाइराः १२ पूर्वं वैनयोः पर्व १३ अत्राह पर्यापवस्वेति मध्यमः पादः १४ शा३ ताक्रा३ तूम् इति वा १५ मँहिष्ठंचर्षणाये३ इति वा १६ दा३ नाम् । या३ ता १७ परेषु चतुर्षु चतुरक्षरमुत्तम- पादादौ सस्तोभम् १८ सखाय आ । हयाइ । साखायः स्तोमवा औहो । पिबा तुवस्या गवा हाइ । जघान नवतीर्नव इया । ओज- स्तदस्य हाशब्दः १९ यत्सो वाजी पूर्वोऽभ्यासः । परो वा २०

इति पञ्चविधसूत्रे प्रथमे प्रपाठके षष्ठी खण्डिका

## सप्तमी खण्डिका

अभि त्वाश्वां द्वितीये तृतीयः पादः १ त्वां वृत्रेषु पत्यन्तः २ पुरुहूतन्नमे गाइरा ३ नेमिन्तष्टे वासा ४ पूर्वा वा विधा ५ नेमिं क्रीडन् कृष्टान्तः ६ ऐहोइगाऽ२विष्टयाइ ७ परो वा कृष्टान्तः ८ सर्वत्रैव नेम्याम् ९ आइहियाइ । गविष्टयाऽ२इ १० न्याय्यस्त्र्यक्षरः ११ षडक्षरो वा १२ सा चा उवा । सूताउवा । द्विप्रतिहारम् १३ न्याय्यो वा १४ वहन्तुसोमपौहो३ । हुंमा२ १५ विपश्चितो अभिस्तोमैः इहाहाहोइ । इहोऽ२३४ वा १६ वाजयन्तो रथाः । इवोऽ२३४ हाइ १७ न हि त्वा यशाऽ३ सांवसू । वीऽ२३४दाम् १८ स्तोत्रँ राजसु गायतस्तोऽ२३ त्राम् १९ द्व्यक्षरो वाभ्यासादिः २० द्युम्नमाभरा इति च स्तोभान्तः २१ त्वागीर्भिर्द्युगदिन्द्राके१शिभी२ः २२ पुरंदरा । प्रगायात्रा२ः इति सस्तोभः २३ उत्तरे च २४ द्वितीयपदनिधनेषु तृतीयः पादः २५ वयमेन यदा कदा यत्सोऽभीनो २६ वयमेद्वितीये तृतीयः पादः २७ ज्या इष्टं यो वा । त्राहागाऽ२३४र्णाइ २८ रथा-इतममतूर्त्ताऽ२३४न्तू २९ राथा इति वा ३० रथीतमा२मतूर्ताऽ२३४न्तू ३१ विपागिरौ वा ओऽ२३४ वा । धर्तारंव्यौवाओ२३४ वा ३२

इति पञ्चविधसूत्रे प्रथमे प्रपाठके सप्तमी खण्डिका

प्रथमः प्रपाठकः समाप्तः

# द्वितीयः प्रपाठकः

## प्रथमा खण्डिका

वार्द्धा३ः श्वाइद्दोवसू होवा १ वचांसिया । स्माऽ३ इस्थवि । रायतक्षुः २ परो वा षडक्षरोऽवद्रप्सद्वितीयतृतीययोः सिद्धः ३ सस्तोभतृतीये ४ कृणुध्वमिहाऽ२वाऽ२३४इशाः ५ पूर्वीरिति वा ६ ब्रह्माणस्त्वा शताऽ१क्राऽ३तो । ब्रह्माणस्त्वोऽ२३४ हाइ ७ उतोहाइ ८ सर्वं वा पदं परं वा पर्व ९ एकाक्षर ओयेऽ३ १० पाऽ३ना इति

चोपद्रवः ११ आइशानो अप्रतिष्कुतः । आइशा । नो अप्रताइ । ष्कूऽ२३४ ताः इति वा १२ नार्ताऽ३माऽ३ । होवा३हा३ १३ ष्णावा संस्तोभः पूर्वा १४ यद्धँसिवृ । त्रमोऽ२३ १५ अयाँसाऽ३सो १६ पीति वैकाक्षरः १७ सोतुर्बाहुभ्याम् । सुयताऽ३ः । सुयताऽ३ः १८ न्याय्यो वा पञ्चाक्षरः परो वाभ्यासिके त्रयो विकल्पाः १९ स्तुषाइ । सखाय आऽ२३हाइ २० अभ्यासो निना । यताऽ३मूऽ३वस्तुषाइ २१ न्याय्यस्त्र्यक्षरश्चतुरक्षरो वा २२

इति पञ्चविधसूत्रे द्वितीयप्रपाठकस्य प्रथमा खण्डिका १

## द्वितीया खण्डिका

पङ्क्तिषु वैधेषूत्तमपादादौ विप्रतिपत्त्यां चतुर्थी पदगीतिर्न्याय्यो वा स्वादोरिन्द्रोम प्रेहि १ पूष्णोऽ३ होइ । भगाऽ२३४ या २ पूष्णे भगायेति वा । पूष्णे३४३ होऽ२३४ इति वा ३ धर्मविधर्म-णोर्द्विपदाकारम् ऋचः परं द्वौ स्तोभौ ४ अक्षरपङ्क्तिषु सिद्धस्तृतीयः पादो निधनपरे ५ अनिधनपरेऽपि ६ र्यराज्ये । वाजाँअभिपवमान । पवमाना ७ ऋचः परमोऽ३हाऽ३४३ । ओऽ३४ हा । एषा ब्रह्मा ८ न स्पृशत् ९ पुष्ये म चतुरक्षरमृचः परम् १० शिवो भुवाऽ२३ स्नाताऽ३ गूर्दादीनां चतुर्णाम् ११ अग्निर्महोऽ२३ नाऽ३ १२ तस्य निर्योक्ता यदुद्गीथाद्वर्षीयांस्तस्माद्दानूसू इति पञ्चानाम् १३ पीवरीं दशाक्षरम् १४ इन्द्रो वि द्व्यक्षरशो विभागः १५ एकाक्षरनिधने चतुरक्षर उद्गीथः १६ उत्तरे स्य राजति १७ द्व्यक्षरो वा स्तोभः १८

इति पञ्चविधसूत्रे द्वितीयप्रपाठकस्य द्वितीया खण्डिका २

## तृतीया खण्डिका

महाऽ२ हाऽ२ इ । औऽ३ होऽ३१ इ । श्रवाऽ२ः । हाऽ२ इ । औऽ३ होऽ३१ इ १ पूर्वं वैनयोर्वचनम् २ गम्भीरे पादवद्वृत्तिः ३

इन्द्रायेन्दो द्वितीय आऽ२३४र्का ४ ओवाऽ२३ । ओवाऽ२३ । पूर्व उद्गीथः ५ उपोषु प्रथमे तृतीयपादाद्यः स्तोभः । षडक्षरं चार्चिकम् ६ अवाहन्ना पञ्चाक्षरशः स्तोभः ७ पुनानद्वादशे चतुर्थपादाद्यः स्तोभः ८ परीतान्त्ययोश्च ९ अच्छाकोशाम्मधौ होऽ३ । हुम्माऽ२ १० येवहरितायाताइधा१ रायाऽ२ ११ व्रतः शुचिबन्धुः प३वाकः । पा२३४ दा १२ अपश्चानँश्नथा१ इष्टा३ ना १३ न्याय्यो वाष्टाऽ२३४ ना १४ परो वा स्तोभादिः प्रत्युत्क्रान्तः १५ पवाइत्र वाऽ३न्तोऽ३ । एऽ३ । क्षरन्ना । दाइवान् गच्छा३न् १६ द्व्यक्षरो वा १७ देवान् गच्छा १८ देवऽ३न्होइ । गच्छो २३४ हा १९ श्रुष्टाइजाता । सइन्दवाः २० आ इन्दाऽ३ वाऽ३ः २१ दावाऽ२३ः २२ स इन्दवः सुवा २३ श्रुष्टाइ २४ चतुरक्षरो वा २५ शाइशा ओ२३४ वा २६ द्वौ चेच्छाइशौ २७ पवा३२ । मा२३४नाः २८ पवमा२३ ना३ः २९ णमधिगो२३४ औहोवा ३० णमभिवा२३ ३१ नेतायः ३२ अपा३म् । हुम्३वा३ ३३ एकाक्षरश्चोपद्रवः ३४ न्याय्यो वा । न्याय्यो वा ३५

इति पञ्चविधसूत्रे द्वितीये प्रपाठके तृतीया खण्डिका ३

## चतुर्थी खण्डिका

वैरूपतृतीयादीनामन्त्या पादगीतिः १ उपान्त्या वा विधा २ बहिर्ऋचन्तु ३ तथा परे विश्वतः ४ सहोमहसोः स्वरीयसां तृतीयेऽन्त्यानुगानद्वितीयतृतीयेषु च ५ वैरूपाष्टमेऽन्त्यः पादश्चतुरुक्तः सस्तोभः ६ अभित्वेन्द्रो रेति वैधवत् ७ यस्येदमिति द्वितीयः पादः ८ तृतीयस्य वा त्र्यक्षरम् ९ ऋषभेऽन्त्ये त्रिरुक्ते मध्यमं वचनम् १० अतीषङ्गे सिद्धः ११ अन्धाश्च १२ नित्यवत्सा । शक्वरीषु च त्रिरुक्ते १३ णं कृणुतेति पञ्चाकरम् १४ परं वातस्त्रिरुक्तम् १५ परस्य वा त्रिरुक्तस्य द्विरुक्तम् १६ मध्यमं वा वचनम् १७ सिद्धो विद्रथस्य

प्रतिहारः १८ वैराजस्योत्तमे पदे मध्यमं वचनं सस्तोभम् १९ वैधवद्वा २० अयं पूषाद्ययोस्तृतीयस्य पादस्याभ्यासः २१ यरावापत्ययोरुत्त-रयोः स्तोत्रीययोर्मध्यमं पदं सस्तोभम् २२ अन्त्ययोर्वा पदयोश्चतुरक्षरं यरावस्य २३ सर्वास्वपत्यस्य २४ पञ्चाक्षर ओवान्तश्चतुः पार्थुरश्मस्य २५ अभ्यस्तो वृषकस्य तथैव २६ भद्रश्रेयसोरुत्तरयोर्विधयोर्मध्यमं वचनम् २७ वृषान्याय्यो वा २८ द्विप्रतिहारे तथा च २९ स्वराणा-मादितस्त्रयाणामुत्तमपादादौ चतुरक्षरम् ३० उपान्त्या वा पादगीति-रेकेषाम् ३१

इति पञ्चविधसूत्रे द्वितीये प्रपाठके चतुर्थी खण्डिका ४

## पञ्चमी खण्डिका

वाचोव्रते रमतां सप्ताक्षरः १ द्वितीये चतुरक्षरः २ सत्रस्यर्द्धिन्यायेषु स्तोभसामसूपान्त्या विधा ३ सिद्धोऽग्निमीडे गवांव्रते ४ इलान्दाद्ये कश्यपग्रीवाहृदयेडानांसंक्षारेषु वृषावद्रयिं वर्च इति हुम्मान्तः ५ देवव्रतेषु षडक्षर इडाभान्तः ६ निह्नवाभिनिह्नवयोः प्रागुपायात्पर्व ७ दिवाकीर्त्यस्यात्मनि तृतीया विधा ८ समैरयेषु विभाग्यः ९ आदित्यात्मनि चतुर्थः पादः पूर्वश्च स्तोभः १० परिधिषु यरव-वदुपान्त्या वा पादगीतिरेकेषाम् ११ मित्रावरुणयोरुपान्त्ये त्रिरुक्ते मध्यमं वचनम् १२ वृषावद्वा १३ उन्नये च वृषावत् १४ शक्वरीषु होन्तः । शक्वरीषु होन्तः १५

इति पञ्चविधसूत्रे द्वितीये प्रपाठके पञ्चमी खण्डिका ५

## षष्ठी खण्डिका

निधनं पर्व सामान्त्यम् १ जातःप्रभृतीनि वासुवद्रवां जायताइवा न्याय्यस्य २ अन्त्यसदृशमन्तस्साम्नि जातःपरेण नकि त्वंहत्यद् उभे यद् अग्निंनेन्द्रायेन्दो सुतासोमप्रथमे च ३ अक्षरं तु वाग्घाइकारः

परिस्वारः । परं वातिस्वार्यात् आदित्प्रियंभगायादीनि । दायो सूगो होतोहा प्रभृतीनीयेथादीनि च ४ ओइडाहोइडेति द्व्यक्षरमेकाक्षरं वा शीकोयादिषु च ५ एषानुनूतेति श्रुतिः ६ होइडाभ्यासे संदर्भः ७ सर्वासां वान्त्यम् ८ अन्त्याया वा ९ डैवेमं स्तो त्वावतो विधान्याय्यत्वात् १० पीति वा संभवात् ११ अर्धेडा सर्वत्र १२ रोहादिहोपाथेडोपोष्वतीषङ्गादीनां १३ इहान्धा सर्वत्र तिग्मेन प्रभृतीनि १४ वारवन्तीये परीताष्टामे च पर्वान्तरत्वान्न १५ नेम्या हीषी नेमिःप्रभृतीनि १६ मन्द्रात् ष्ठाविवक्षणादीनि १७

इति पञ्चविधसूत्रे द्वितीये प्रपाठके षष्ठी खण्डिका ६

## सप्तमी खण्डिका

अथोपायाः १ पूर्वां चेदौहो वा मन्द्रस्वरा २ महाहा ३ हीष्यन्ताश्च ४ ओवा च विस्वरादिनि ५ अवाचः ६ वागाउकारपूर्वा ७ हुम्मा मन्द्रवद्वैसर्यम् निधनं च ८ तेभ्यः ष्ठाहीषीप्रथमोच्चानि वाजा चान्धा च सामा च ९ आत्वासोप्रभृतीनि हिन्वन्नृशुक्रा यःकाओजस्तदादयो हुम्मात्तवे शृणाह्यादीन्यग्निर्वृत्रादीनि १० नाँष्ठादाश्च ११ पयसि विकर्णे शुक्रियोपान्त्ये १२ ऋषभचतुस्त्रिंशयोः १३ शन्नः प्रभृतीनि १४ अन्तरिक्षादीनि च १५ आर्चिकमपादान्त्यमेकेषां वा १६ देवा-प्रभृतीनि १७ तविषाम् १८ पवमा १९ मयि वर्चः २० वार्त्रघ्ने २१ उवेकारौइकारा व्यवयन्तो विघातका निधनाङ्गं च २२ उष्णि-गष्टान्तः २३ न विधादिस्त्वांवृत्रेषु परीतः पवते २४ ददाशान्तम् २५ ऋषीणां मान्तम् २६ गोभिष्टे वान्तम् २७ बाधो जहीति पर्व २८ इहेव त्रीणि वा २९ आतून इहकारः ३० रथीनां च सुहव्यम् ३१ यो रयिं पवस्व हीषीप्रथमोच्चे ३२ प्रथमोच्चं वा ३३ अयाप इह इहिया त्रिरुक्तम् ३४ प्रथः कपे च ३५ दिवाकीर्त्ये मदायाः ३६ पुरीषपदेषु च ३७ दिक्शब्दः स्वरेषु ३८ हृदये त्रिरुक्तं प्राग्वचः ३९

आनन्दप्रतिनन्दयोः ४० त्रिरुक्तमन्त्यमुद्गीथोऽन्यः ४१ उपायो यस्मान्नोर्ध्वं प्रतिहारः ४२ निधनं प्रत्यङ्गम् ४३ इतरेषां यथोक्तम् । यथोक्तम् ४४

इति पञ्चविधसूत्रे द्वितीये प्रपाठके सप्तमी खण्डिका ७

द्वितीयः प्रपाठकः समाप्तः पञ्चविधसूत्रं समाप्तम्

Reference:

Sharma, Bellikoth Ramachandra, ed., *Pancavidha-Sutra with Commentary,* (Tirupati: Kendriya Sanskrit Vidyapeetha, 1970).

# कल्पानुपदसूत्रम्

## प्रथमः प्रपाठकः

आचार्यप्रमाणनिर्देशो ब्राह्मणसूत्रार्षेयकल्पक्सामाम्नायोहोपदेशमाचारं चैके नियमाभावस्त्वेवं त्वेषां क्वचिदविशेषश्रुतौ तद्विशेषश्रुतिस्त- दन्ववेत्यविधिर्यथा ज्योतिर्द्दशरात्रयोर्दैवतलिङ्गछन्दः सूक्तचोदनासु ब्राह्मणेक्र्ससाम्नायस्तदन्ववेत्यविधिस्तोमे च सर्वक्सामसामर्थ्य आ- र्षेयकल्पो यथा सर्वस्वारेंद्रस्तोमराजस्तयेऽप्यार्षेयकल्पे न च लिंग- नोदनास्तहगीतिर्यथोक्तमेन्द्रौद्रेयक्रूरकृतपर्याय७ स्तोमोहगीतीनां च सूत्रे वैरुपे च पदादेतव्यत्यास उपदेशो विरोधिषु विकल्पः प्रामाणया- त्सौभरत्रैककुभशुक्रवत्युवतीवद्बलभिदग्नेस्तोमयोरिति चेन्न परीत्याप- कर्षान्नयस्त्रि७शतं तृतीयसवनं प्रत्यरोहीतिवज्योतिषो विकल्पस्थानेषु प्रथमकल्पो नित्यस्तं पथ्या इत्याचक्षते तस्य नोदनाधिकारः समा- प्तत्वात्प्रमाणस्य क्लृप्तो ज्योतिष्टोमसमानमितरं ज्योतिष्टोमेनेत्य- न्यार्थदर्शनाच्च त्रिष्पुरस्तादैंद्रवायवाग्रां पुनानः सोमधारयेत्पथय- दिबृहत्पृष्टो ****** निवाबां दर्शयत्युत्तरे कल्पा आनित्याः शेषवत्वाप्रमाणस्य तां न्वै यजना इत्याचक्षते गायत्रसामान्त- रेवतीविष्टुतयोनित्यां गंतव्यंजनकल्पबरिहाणां निमितरुहणातु व्यंजनं प्रमाणशेषवत्वाच्चाकर्मांतरं व्यंजनं ज्योतिः प्रकरणविधेः कर्मांतरं वा नानाचोदितत्वात्समानमितरं ज्योतिष्टोमेनेति चान्यवत् १

द्वे गायत्र्यामित्यविशेषश्रुतेर्गायत्रं न गायत्रादेतीति च नित्यवत्तस्मा- द्गायत्र७ सप्तसामेति चोक्थेष्वैंद्रे परे तदन्याथ ग्रहणात्तथा च हौत्रे विज्ञायत ऐंद्रीषु ब्राह्मणा छ७सिनेस्तुवत ऐंद्रीष्वच्छवाकायेति व्यक्तं च कौषीतके वयमुत्वामपूर्व्यो सौभरमधाहींद्रगिर्वण इति नार्मेधं पाहि यद्वार्दिष्टीयवत्सौभरनार्मेधे अतिरात्रे संयोगादविशेषश्रुतेस्तु सर्वत्र हारित्वरर्णं ब्रह्मसामच्छंदः संयोगादितयोस्तस्मादुगायत्रीषु तेनानुष्टुभ

इति हि रथंतरप्रयोगो नानास्तोत्रयोरव्यतेतोबृहसौभरप्रत्नवतीवार्क-
जंभैर्जाभितदेतैव्यवेयं तड्क्निसंन्निपातो वा तथा बृहत्संनिपाता-
रथंतरकरावरथंतराभ्यां बृहत्पृगुसंधिष्ठाम्नत्र्यातिरात्रे भिवताजाम्य-
भीति रथंतरस्य रूपमिति ताद्रूपात्तथा चाभिजितिरथंतसामांतलिंगेन
यथा बृहद्वाताद्वाता तथाचाभिजिति रथंतरसामांतलिंगेन यथा
बृहत्सामांतलिंगेन वार्कजंभे प्रथमेश्वरसाम्नत्र्यायुष्मभिजित्युत्तमे च
साकमेधानां बृहत्सब्देनान्यस्याननुकल्पानां नवा बृहच्छब्दाभिशब्दो
सतोकरावरथंतरप्रन्नवतीवार्कजंभानुक्लृप्तेश्चतुः स८स्थं गौतमः प्रत्य-
त्तविधानतिस्त्रः षोडशिनस्तोत्रे देयेतिलिंगात् षोडशिस८स्था त्रि-
स८स्थं धानं यय्यो न हि लिंगेन निग्रहः प्रधानस्य द्विस८स्थ८
शौचिवृद्धिः प्रमाणं निर्वृत्तेः शेषवत्वात्प्रमाणस्य वैकृत्यो मध्यमे २

सर्वत्र गायत्रं प्रातःसवनेः प्रकृते दशरात्रे च वामदेव्य यज्ञायज्ञीये
मध्यमेष्टाहेराजि च यज्ञायज्ञीयं बृहद्रथंतरे च छंदोमेषु त्रिषूष्णिक्च
दशमे गायत्रं च सार्पराज्ञाषु कर्मांगाविशेषाविन्द्रजित्युत्तरयोर्विकल्पः
कर्मार्थत्वात्स्त्रौमिकीनां पार्थुरश्मं ब्रह्मसामस्वास्वनादेशादन्यासां
ब्रह्मसाभङ्क्वा तदर्थस्तोत्रीयाम्नाना संचारो हिर्यद्यु वैरायोवाजीयमेते
एव बार्हद्गिररायो वाजीये सस्तोत्रीये अन्योन्यस्य स्थाव्यति हरेत्का-
भिसंचार***भान्य८ सुषभिद्ध इति तानूनपातनाराश८सीये यथा स्वं
नाराश८सा वसिष्ठशुनकात्रिवध्र्यश्च करावसंकृतयः स्तानूनपाता इतरे
समवाय उद्गात्तवासेन तत्कर्भित्वाद्गृहपतेर्वा गृहपतिं वा अन्वन्ये
सत्रिरा इति हि यज्ञायज्ञीय बृहद्रथंतराणा८ सर्वत्र काकुबुत्तर्यं
द्व्यत्तरप्रस्तावता चोत्तरयोर्न वैतानि वा एतानि द्वादशात्तरप्रस्तावानि
ककुबुत्तराणि सामानि बृहद्रथंतरे यज्ञायज्ञीयं चेति भाल्लविनां तृचा
पत्तौ पूर्वोत्तरयोरत्तरे सोत्तरस८संग उदयनीयेर्त्ततरात्रे प्रन्नवाननूरूपो-
जाम्यर्थो न चानुरूपचोदनाव्यक्ताबृहत्यावातलिंगत्वादक्सामाम्ना-

यव्यक्तश्चानुरूपो न तु बृहत्याकृतनुष्टुभमार्षभीं बृहत्यान्वेव प्रायणीय त्रिकटुकसवितुः ककुप्सुविधृतिदतिवातवातोरयन्येन्यस्याननुकल्पना क्लृप्तत्र्यर्थार्षभी ३

ग्रहीनद्वादशाहे दशरात्रे विष्टुती७ सर्वप्रयोगो न स्यादित्येके सत्रेषु दशद्रात्र इति ह्याहेति स्यादित्यपर७ सर्वप्रयोगस्य हि दशरात्रः प्रयोजको न सत्रत्वमदशरात्रेषु हि ससत्रेष्वनैकांतिकः सर्वप्रयोगसत्रे विहितं कथमसत्र इति चेद्यथौभयतोऽतिरात्र्यं तयोर्बहिष्पवमानता गौरीवितस्वरता सात्रिकी च रात्रिस्ताथेतत्कुलायिनी सप्तास्थितयो-र्बहुयजमाननिमित्तयोरेकयन्येन कथं भाव इति चेन्निमित्तांतरभावा-त्स्यादेकयज्ञेऽपि न च कामासर्वप्रयोगस्य निमित्त७ सर्वाप्तिः सर्वप्रयोगस्य समा च सर्वाप्तिः सन्नाहीनयोर्यथाशिषं चान्यत्र दशरात्राद्विदधद्दशरात्रे सर्वाप्तत्र्यानिमित्तांतरबाधेनायथा शिषं दर्शयति सत्रं च द्वादशाहं विधायनेन यजेताप्यहीनभूतेनेत्याहता दशेनेत्य-र्थस्तथालोके तदनेन भुक्तं यदेवह्य इति तस्मात्सर्वमहीने सत्रवत् ४

सुब्रह्मरायायां नामग्राहस्योर्ध्वं सतिरात्रादशग्रहणमिति चेद्गुरु-त्वकारितं तत्सत्रे तदेकयज्ञेन स्याद्वादशयज्ञमानादिष्वहीनत्वान्ना-मग्राहस्याद्बहुयजमानसामान्याद्वा सत्रवत्प्रायणीयांते सुब्रह्मराया-विकल्पाः सत्रप्रकरणविहिताः कथमसत्र इति चेत्स प्रायणी-यत्वाद्वादशाहस्य हेतुसामान्यादहीनेऽपि स्युस्तथा वैवं दशरात्रि-रात्रायाः सत्रविधानं किमर्थमिति चेद्यद्यविशेषो व्यधानस्याद्दशरात्र इति चतुर्षु दशरात्रेष्वहीनिकेष्वप्यभविष्यद्वादशाहिके च दशरात्रे सर्वप्रयोग इष्यते सर्वाप्ताने तनेषु यस्य चानपेक्षहेतुवचन-प्रामारायात्सर्वप्रयोग इष्यते सत्रे नासत्रे तस्य मध्यपृष्ठ्य पुरस्ता-त्पृष्ठ्ययोरप्युभयोर्दशरात्रयोः सर्वप्रयोगो भविष्यन्न च तत्रेष्यते न हि

तत्र सर्वाप्तिरेकत्र न स्तोमा अपरत्र न पृष्टानि चतुश्चतुत्वारिंᳮशद्वात्रिᳮशयोस्त्वसत्यपि सर्वप्रयोगे हर्भात्क्वात्स्मात् ५

सत्राहीनं लामकायनः स्तस्मिᳮस्तस्तच्छब्दलिंगसंयुक्तानि यथा संयोगᳮ रथंतरकालेय गौरीवितयार्थुरश्मवत्संयुक्तश्रुतिवान्यत्रवेत्सर्वᳮ सर्वत्राविशेषसंयुक्तानि तूभयत्र संयुक्तेषु पन्नेणार्थवा उदयप्रयंत इति रणवतीसर्वस्वारे जराबोधीयाग्निष्टोमसाम्नियज्ञायज्ञीयमनुष्टुबंत्यं नित्यवृत्तिभ्याᳮ हाविष्मतमौन्नयरणववतौ लोपोयनमास उत्तमे नार्मेधमनुष्टुप्सूछांतदर्शनात्तांत्रीवर्गानाचोदितत्वाद्विच्छंदः सुरूहप्रत्यंतमायित्वादौभयरूप्यादिति चेन्निमित्तशेषः प्रयुंज्यात्संतंन्बुद्वᳮशपुत्रवालखिल्यावत्पृष्ठ्योवछिन्नबहिष्पवमानᳮ समूढांगं तद्विधिसुभयोस्तु प्रकारणान्नवाहयोगत्वाच्चेतरासामृतुषहहे वैवमिह यद्वासिष्टᳮ षष्टे विभक्त्यर्थेन तस्मिᳮस्तच्छंदस्त्वात्तत्कारणं पार्थं न च पूर्वस्मिᳮस्त्रहैद्वैधं छंदसां च व्यूहसमूहौ न साम्नाᳮ सर्वछंदःसु सिद्धत्वादभ्यासवत्वाष्ट्रीसामपार्थलोकतल्लिंगयान्न चेत्स्वरः प्रत्यस्मा इति बृहतीतृतीयापृष्टेऽनुष्टुप्सुषोरुशनुष्टुप्सुषोरुशी ६

अर्द्धः अभीवर्त्तो ब्रह्मसामेति तस्य स्तोत्री विधिर्यदितः समानᳮ सामभवत्यन्योन्यः प्रगाथं इत्यत्यंतनानात्वय आस्तुतं कुर्वातयथा दुग्धामुपसीदांदवं तदिति प्रयुक्तप्रतिषेधप्रतिषेधस्तस्मात्ववायः पंचसुषाः सुबार्हताप्रगाथा आप्यंत इत्यभीवर्त्तस्तोत्रीयास्तत्प्रकरणे हि श्रूयंते न्योन्यः प्रगाथ इति च नानाप्रगाथतां दर्शयति चतुःशतमैंद्राबार्हताः प्रगाथा दशतयीषु तेषां चत्वारो न्यत्र बृहद्रथंतरस्तोत्रीयौ काले यस्योत्तरपन्निकᳮ शतस्यैकं चतुर्विᳮशे कुर्यादत्रादित्वादभीवर्त्तस्यैकोनं च शतᳮ सातोबार्हताश्चैकात्ते त्रिᳮशतं तृचास्तेषामेकविᳮशत्या सहैकोनᳮ शतमभिप्लवेषु प्रयुंजीत तृतीये तृतीये हति-

सतोबृहतीत्कुर्वन्यंचमस्यमासस्योत्तमे भिलवे पंचमि हनि सतो-
बृहतीरापंन्ना प्रभवाभ्यां चतुर्वि७शे वा सप्तमतत्रत्वाद्वि७शत७शतं
प्रगाथानामेध्यर्द्धेडं चैके विधानाच्चतुःशतनृग्वेदे षष्टे छंदसी सयुंज्यै-
तवामिति तिस्त्र उष्णिह स्युरेकागायत्रीति गायत्रीप्रतिविभजे बृहती-
रुपत्वाय बृहत्याप्तौ छंदासंयोगं धानंजय्योष्टौ सतोबार्हतास्तृचाः शेष-
स्तान्प्रथमे चाभिप्लवे कृत्वाद्वितीयस्य च द्यहे ततः संयुज्यादिति
चतुरुत्तरैरेव छंदोभिरेतव्यमिति गायत्री७ चतुर्वि७शे कुर्यादुष्णि-
गनुष्टुभावाभिप्लविकयो पूर्वयोः सतोबृहंती पंचमांतरे पंक्ति७ षष्टादौ
वा ततस्त्रिष्टुभमुत्तरे स्वरसांम्निजगंती बृहत्वाप्तावेवेति गौतमो नवम-
सातोबार्हतास्तृचाः शेषो द्वौ च प्रथौ गोतन्प्रथमे चाभिप्लविके नूत्वा-
द्वितीयस्य च पंचाहे ततः पंक्त्यादयः ७

छंदः संयोगं तपोद्यविधिस्तत्स्थाने चातुरुत्तर्यं मासशयब्दवैत्थ्र्यमिति
येत्पंचसु मास्विति यथा पृष्टचे यतोपवादस्तु लिंगनदद्राणवतीवन्न च
मासांतर एततत्कर्मास्तीत्येकदेशे यथाकालकृतौ लोके कृतमिति
बृहत्या चैव त्रिष्टुभा चैतव्यमितिचातुरुत्तर्यविषयं कृत्स्नपद्मसस्तु
विधिबृहत्य प्रभवाद्राथंतरीषु त्रयस्त्रि७शतादिषु त्वा बृहत्या-
सख्यार्थवत्वात्तृतीयसतोबृहतीकानादिकल्पषड्प्रगाथयोर्हेव७ सह ते
च तैः प्रगाथपरिमाणं प्रगाथविधिस्तु नान्यदव्यवस्थाचोपवती-
वन्माशक७ स्मृतिकल्पः क्रियाविधिराद्रिकल्पे भीवर्त्तस्य याव-
स्तोत्रीयपृथक्त्वं तावत्सामपृथक्त्वमौत्तरपद्मिकमिंद्रक्रत्यरेत एवेति
संबंधः सलोमत्वायेति च विश्वजितिबृहत्पृष्टे पृष्टसंयुक्तो द्वारोनित्य-
प्रत्यापत्तिर्बृहत्पृष्टसंयुक्तकृतिश्वंतषये गोत्रायुषोरानुपूर्व्ये वार्कजंभो
द्वारः कारणापायाद्विहारमध्ये पृष्टचवत् ८

वामदेव्यमात्मात्रिष्टुप्सु तदर्थास्तोत्रीयाम्नानात्संचारस्ववैलिंगैस्वासु-

वान्यासंयोग उत्पत्तिसंयोगदृष्टाभ्या७ राजनार्थमाम्नानतत्स्थाने स्वार७ सौपमसंचारदृष्टताल्लिंगैस्तद्वौभयत्र दृष्टसंचारत्वादतिरात्रे यज्ञायज्ञीयं पुछमैंद्रीषु बृहतीषु स्थानाद्विपदासुवान्यार्थदर्शनात्तदाहुरतिशयं द्विपदां यज्ञायज्ञीयमितिनाविधे द्विपदामिति वयसां पुछादिवर्ष्मेलांदंतृच आवर्त्तिन्यायेन दशाक्षराण्यनुगानानि द्वादशर्चशतिशां उल्पोनुगा-नर्गुत्पत्तेरातेग्निं तमन्य इत्यु******रौनुत्वोषत्षड्वाद्रचेतुस्तत्कादिपरा-मर्शोहाभ्यां द्वृच७ स्तोत्रीयास्तृचाधिकारत्वाद्विष्टुतीनां तिस्र उष्णिह-स्पुरेकागायत्रीतिवत्समुद्रछदश्वसमासे वारवंतीयमग्निष्ठोमसामेति-तांत्रीषुबार्हतस्थानवृत्तिभ्या७ स्वासुवान्यासंयोग उत्पत्तिसंयोग-दृष्टाभ्यां ६

सावने संवत्सर आचार्या ज्यौतिषा न तु कल्पयंति षट्त्रि७शदून नवोनौ नाक्षत्रौषरुहोनश्चाद्रमसोष्टादशभिर्ज्यायानादित्यस्तेषामावा-द्वापौपक्षसोः प्रविभज्यानुकल्पयेन्नाक्षत्रे मासाद्यस्याभिप्लवस्य स्थाने त्रिकटुकानवोनस्य पंचाहोयनमासेषु चांद्रमसस्य षड्वादित्यस्य तेष्वेव त्रिकटुकाहारो विराट्संपन्नो ज्योतिरग्निष्टोमस्तथा रात्रिं द्वादशाहः षोडशिमा७श्छंदोमाश्चानवछिन्नाश्च चतुर्वि७शं च चतु-र्वि७शं च चतुरुछ्र्योभिप्लवोऽग्निष्ठोमावभिजिद्विश्वजितावुछ्र्यास्वर-सामानो गो आयुष्टी संप्रयोगे त्रिकटुकास्त्रैकटुकश्च पंचाहः पंचदशपक्षं च महाव्रतं गोश्चातिरात्रस्त्रिवच्च दशरात्रो नवसप्तदशश्चद्व्यधिको ज्योतिरतिरात्रो विषुवान्पंचदशसप्तदशपक्षं च महाव्रतं त्र्यधिको ज्योतिसत्थ्यः षोडशिमानतिरात्रः पंचोत्थ्यश्चाभिप्लवश्चतुरधिकः पृष्ट्योवछिन्नोऽग्निष्टोमाः स्वरसामानो द्वादशो विषुवांत्सप्तादशपक्षं च महाव्रतं पंचाधिकं इंद्रस्तोमः षडधिकस्त्रिवृदभिप्लवोष्टाधिको द्वादशाहो षोडशिक आयुरतिरात्रो बृहस्पतिसवश्च त्रिवृत्पंचदश-क्लृप्तश्चाभिप्लवउद्भिद्वलभिदौ च नवाधिका अभिजिद्विश्वजित्सर्व-

स्तोमा अतिरात्रास्तेषां प्रयोग८ संपाद्यविराजं तं नित्यानि कुर्याद-विशेषेण हि विराट्संपत्तिः कर्मणां ये विराजभिजित्तदशक्तौ विधिसंपत्तिनित्यो विधिसंपत्तिनित्यः १०

गोआयुषी उत्थ्यातिरात्रौ गौतमधानंजय्यावग्निष्टोमातिरात्रौ चाभि-जिद्विश्वजितौ संपदतिरात्रश्रुतेरतिरात्रां छौचिवृन्निरसंयुज्यश्रुतेः सं-घातसंपद्द्वादशत्वात्तत्प्रयोग इतिरे सपुं विश्वजित्यसंवारार्थेनाभि-प्रगोपतिमिति वदविशेषश्रुतेस्तु सर्वत्रातत्प्रकरणत्वाच्च क्लृप्तयर्थमन्यत्र यथा ज्योतिरायुषोः सौभबृहच्छब्दावुभयान्याज्यानीति बार्हते पूर्वे दैवतसाम्य दृष्टाभ्यां व्यत्यासस्तु छंदोमवत्संचारोविद्यनवत्साद्यः क्राण्याज्यानीति विकल्पो गोवदुत्पत्तेस्त्वधिकारो विकारं च प्रतीयन्बृहद्रथंतरे चोदनासु स्वारसामिकं छंदो योगं तस्य रेवतीष्विति जराबोधेत्याग्नेय्योग्निष्टुत्वात्सिद्धाधिकारस्तूहांतरयाव्वेतरासामेष-त्वोत्तरान्येति सवनं त्रिप्सु संपद्वे स्तोत्रीयार्थश्च वैश्वदेव इंद्रस्तोमस्येति चेदविप्रतिषेधोविघिस्तु मध्ये पृष्ट्येनर्थका प्राग्विधो न च ब्रह्मसाम-स्वासु श्यैतमिवसंपदादित्यस्य प्रकरणात्सर्वस्वारे लिंगचोदनात्प्रा-कृतीषुप्रष्ट्यानि स्वास्विति चेन्नविप्रतिषेधाद्रोरवरथंतरनौधसवत्स्वा-सु वा तदर्थस्तोत्रीयाम्नानोहाभ्यां लिंगचोदनाप्रायसर्वस्वारवद्बृहत्पृष्टेषु ज्योतिष्टोमआभीवश्रुधा८ संयोगवृत्तिभ्यां पौष्कलं वा । सवचना-दुत्तरप्रत्याहारे च पूर्वासमाप्तिर्वृत्तिभेदश्च सुज्ञानदैदासविशोविशीय-क्लृप्तस्तत्पृष्टेषूभौ पर्यासाविति बार्हतौत्तरौ तत्पृष्टत्वात्कृतक्रमे वान्वा-देशोभिषेचनीये च पूर्वः कविभा८ स्वेकाहिकस्तथासंप्रयोगे त्वादेशो यथैता एवं समहाव्रता इति वचनमभिषेचनीये ११

पन्यमिति श्रौतकन्न८ होतुर्दैवोदासमात्वाविंशत्वित्यार्ष्टा द८ष्ट्रंकौत्स आहीनिक्या८ रात्रावृक्समाम्नानो हतदान्नत्वान्मर्गां यवमतिरिक्तस्तोत्रं

वैश्वदेवीषु तद्देवतत्वादुत्तमे च दर्शनात्स्वासु वा तदर्थस्तोत्रीया-न्मानोहाभ्यां न च दैवतं मध्ये पृष्ट्यवद्भक्तिवादो वा वचन-मुत्तमेगर्भाणां न धर्मागुणात्स्युस्तु संयोगादुणात्ताछब्द्य८ संनिग्धो कार्यास्तथा श्रयत्वादव्यक्तास्तु प्रधानसमवायेत्सकृत्सुत्यांगत्वा-दग्नीषोमीयांतवद्व्यवाये प्रतिप्रयोगं ज्योतिषु गर्भिषु रथंतरसंयुक्ता निवृस्तद्धेतुत्वात्त्रिवृतातिरात्रेणेति सर्वः कृत्स्नसंयोगात्प्राक्कुरात्रेस्तत्र स्तोभव्यत्ययत्तेर्न रात्रावन्यदर्शन८ स्तोमस्य तथातसंपत्संपतिस्तोमा-देशोहः कल्पार्थः स८स्थारात्रिशब्दनात्प्रायानुपपत्तेरप्रत्यादेशो भूयि-ष्टत्वाच्च चतुर्वि८शमिति यथा दशम उक्तकृत्स्नसंयोगादिति निवृत्तिः षोडशवदहेतुरपवाद इति न्नापवादो प्राप्ते संपदनिष्टावचनादविशेषा-न्नाहः कल्पार्थः प्रत्यादेशे स्यात्सर्वत्र वचनाद्भूयस्त्वाकल्पनाशक्तौ स्वारासौपर्णं कवतीषु स्थानापन्नवृत्तिदृष्टसंचारः स्ववैलिंगैः स्वासु-वान्यासंयोग उत्पत्तिसंयो ऐंद्रवृत्तिभ्या८ सामतंत्र्य गुणत्वेन संचारो निर्हायवचनादन्यसंयोगो विप्रतिषेध तथैव सत्रा माहीय विशो-विशीय वारवंतीयानां १२

इति कल्पानुपदे प्रथमः प्रपाठकः१

## द्वितीयः प्रपाठकः

पातंतकप्रथमस्य बहिष्पवमानं वैष्णवीष्वनुष्टुप्सु तद्देवतत्वाद्याव-छुतिविकारा******चतुष्टोमचतुर्त्रुवाव्यतिरेकाद्वास्वाधर्म्यं पंचदशे त्रिपर्यायश्च उभयकृतत्वाच्च***त्वासुचतुष्टोमस्तात्रापदिश्यमानः पंच-दशस्ताद्वर्म्येणानुभयकृतत्वादिति चेद्यथा पक्तशतादिष्वश्वस्य सर्व-त्वायेति चैते एव पूर्वे ग्रहनी इति पातंतकाकं विधामा यदि देशात्पतंतकादित्वात्त्वतिदेशस्य यतः पतंतक एकाहा स्वतंत्र-वृत्तेस्त्रिरात्रतंत्रासु सर्वस्तोमचतुष्टोमवत्स्वातंत्र्ये च त्रिरात्रतंत्रविलोपो हीनसाह्नव्यपदेशवत्त्वाष्ट्रीसासामनीस्वारे ग्रनरांधीगवमित्यनभ्यास-

त्रिणिधने स्थानाजामीति चेद्व्रतवत्स्वारे वा जाम्यर्थेनाभ्यामा-
वतस्त्वाष्ट्रीसाम्न इति च तत्तंत्र ग्राजिगाक्रौंचे उद्वरतीति चैव८ स्वासु
याममिति छंदः स्वांसुग्रहणवृत्तेरहस्वासुप्रकरणवृषरावत्वाद्दीर्घतम-
सोकोंत्यः स्वास्वनादेशतांत्रीत्वादसावीति वा पूर्वसंयोगादार्भवांतेव
दर्शनात्प्राम्नानाहृतवत्यो नवमाव्यतिरेकत्वाच्च योगश्वधृतवत्यो वलो-
पवृत्तेश्वलौशकावलोकयोश्चेवमाहरति द्वे पदाति छंदस इति तांत्रा-
पकर्षात्सत्वा पूर्वसंयोगाभ्या८ सौहविषवृत्तिमं योगाभिनियोगाभ्यां तु
वाजदावये विलोपवृत्तेश्च १

यथाव्यूढति समूढोवलोपन्यायात्तद्वच्च वैरूपस्य लोके रथंतरमि-
त्यभ्यासंग्यःपंचाह इति कृतास्तामचोदना नतु प्रत्यवरोहोरात्रेरव्यति-
रेकादायुष्कामषपृष्ठ्यावलंयोर्द्वितीये पार्थं तुर्यादसंचारा यतद्वच्च पा-
र्थस्य लोक ग्राकूपारमितीहवद्वा वासिष्ट८ षष्टे विभक्त्यर्थाभावा-
दलोपवृत्तवंत्ययोः समूढो न भ्यासक्त इति जामदग्नाप्रवृत्तप्रतिषेधा-
र्थवत्वाभ्या८ स्तोमवृद्धिनिमित्ताहे गायत्री तंत्रात्वितावाभ्यामंग्ये
बहुलं तु त्रिवृत्तिगायत्री स्वादिष्टयामदिष्टयेति वैकृत प्रत्यनंतरत्वा-
द्वानित्यानुवादस्वासुकालयमिति चेद्यज्ञायज्ञीयस्य सौभरमिति तांत्रीषु
बोर्हतस्थानवृत्तिभ्या८ स्वासुवान्यासंयोग उत्पत्तिसंयोग ग्राग्नेय-
वत्तिभ्या८ सामतत्र्यगुणत्वेन सचारोननिर्हायैवं चौत्तरे सोमाः पवंत
इंदव इति क्रौंचे स्वारपूर्वे ग्रनुष्टुभ्न्यायवृष्टाभ्यां पूर्वयोरितिचेद्व्यक्त-
ग्रहण८ षष्टिके वा स्थानपूर्वसमार्धभ्यां व्यक्तेरषाष्टिकं २

दार्ढच्युतपंचमानिगोष्टपंचमानीत्यावष्टमिकानिस्थानात्पंचम वाच्य-
त्वाच्च षाष्टिकानि चक्सामग्रहणात्सर्प्यसाम्नीवार्भवीयाजामिचा-
ष्टमिकेषु पद्मनियोगार्थं दार्ढच्युतग्रहणं तत्प्रकारेण तत्सामान्याद्गोष्ट-
श्वत्रीवद्वदौ रंध्रे यथा प्रकृतिविकारावचना ****** बृहतीन्या-

यत्वादेकचोदनयोश्चार्च्छाद्विनियोगेन त्रयथार्थं पृष्ट्यस्तोमेव क्लृप्ताता-
निषेधसाध्ने यज्ञायज्ञीयेन व्यवेयेजामि प्रतिषेधात्तथा च नवमे विधि-
क्रमस्वार्षेयकल्पस्य कर्मक्रमनित्यत्वादुभयथा ग्राहिक ब्राह्मणम् ३

तस्यैजतुष्यैकर्ज्ञाविनिसामविधिप्रकरणश्रुतेः समाम्नोरतिदेशोऽभिजि-
तो गायत्रीति च षष्टं तांत्र्योश्च सत्योर्न ज्योतिर्विराट्टं त्रयोर्ग्रहण८
स्यात्तात्र्यौ वा वृत्तिर्जनुषैकर्वाकिति च ग्रहणमर्थादाभिजिती पुनर्ग्रहणं
ज्योतिविराट्रं त्रयोरनुरूपाः समूहत्वाछामूहिकानवानुरूपचोदना-
व्यक्तावारुरायेकाभवत्यादित्यैकाभवतीति च सामूहिकेषु व्यक्त-
प्रकरणे तु पंचानामिति तद्वच्च कल्पामृन्नतेत्यनुरूपोनवर्ज्चप्रकरणं श्रुते-
स्तु लिगाद्वारुरायादित्ये यज्ञायज्ञीयमग्निष्टोमसामेतिस्वदाशमिका-
देशसमत्वाद्वैराजत्वाद्विराट्रुश्चासुनुग्राहित्वादूहांतरयाच्चेतरासां वै-
कृतप्रत्युपस्थाने च स्थासुप्रायणीय व्रतवत्त्रिष्टोमोग्निष्टोम इत्युत्तर-
योरन्यतरो द्रव्यसमत्वात्सप्तदशो वा प्रकृतेः स्त्रित्वे भावादेक-
वि८शस्य पृष्ट्यावलंबस्य पंचाह इति कृतरूपचोदनानत्वाद-
योगानिमित्तं द्दष्टत्वादितिचेन्ना दशमे निमित्ते च कृते कृतं कृत्यर्थो
दशमार्थेन छंदोमवतिया एवामूः प्रयंच्छम्या अवदधातीप्ति च संबंधः
संबधः ४

त्रयोदशरात्रे सर्वस्तामविकल्पो गोवद्विशेषार्थश्च यस्य वः यव्या-
स्वित्यैकाहिके गोश्रायुषी इति च द्वितीय तृतीय तंत्रार्थक्यमिति
चेन्नथैकाहस्योत्पत्तेत्स्वाधिकारो विकारं च प्रतीयद्बृहद्रथंतरचोदनासु
स्वारसामिकं छदोयोग८ सत्रत्वाद्वाभ्यं वैकाह्यं व्रतंगो श्रायुषामिति
चेत्पुनर्ग्रहणांतद्भावात्समत्वादग्निष्टुतापृष्ट्योवछिन्नो हिरात्रि सत्रेषु दा-
त्सरात्रिकः प्रकृतत्वात्सांवत्सरिकाहीनि कलिंगविप्रतिषेधात्प्रसंगा-
च्चास्य प्रत्नानुरूपो जाम्यर्थस्तु च क्लृप्तं बहिष्पवमानोपपत्तितवा-

हयोगासु ह्युत्पत्यानस्मात्रि च क्लृप्तं बहिष्पवमानः सांवत्सरिको वा गौरीवितस्वरत्वादनुक्लृप्ताभीवर्त्तकालेयः संवत्सरसंयोगात्तयो संवत्सरक्लृप्त्या च प्रतिदिशन्ननुक्लृप्ताभीवर्त्तकालेयः पृष्ट्य इति रासात्रिसत्रन्यायत्वादाहीनिकोवाषाडह्याद्गौरीवितस्वस्त्वाष्ट्रीसाम च पंचमे सात्रिकत्वादथ यदि सात्रिकः स एव गौरीवितस्वर इति चतुर्थषडहेन प्रतिदिशन्न रूपाजाम्यर्थस्सर्वत्र वा विशेषात्सर्वः त्रिकप्रदेशमध्यत्वाच्चतुर्दशत्रिदिषुक्रमात्क्रमे च सर्वत्रिकं त्रयोदशरात्रे पृष्ठ्येव छिंन्नबहिष्पवमानं व्यवायात्कामीति चेद्यहत्संधिषामातिरात्रो व्रतवद्वा प्रत्नवत्वजाम्यर्थेन दशमबहिष्पवमानं च प्रयुक्तप्रयोज्यमदृष्टमतोऽन्यथान्यायो बृहद्व्रतवद्व्यूढाछंदोमागौरीवितस्वरत्वान्न हि समूहोऽस्ति कृतः प्राग्गौरीवितस्वरस्तथा पृष्ठ्योदष्टा हि विप्रतिपत्तिर्नवाहयोगवतः ५

गो ग्रायुषो विश्वरभिजिद्विश्वजितोतिरात्रा एकाह्याजाम्यधिकसंर७ हि स्यात्सात्रिकीषु गौरी वितंचाघाव्यूं न च बार्हदुक्तरौरवव्योरान्यलोक्यं ज्योतिरायुरग्निष्टुत्सुश्रुधासुष्णिह्यैकाहवृत्तेःपौष्कलं वा वचनाद्बृहस्पतिसवे च सुज्ञानमभिप्लवाभ्यासे कल्पवियाराररितानियावत्प्राप्तिनिमित्तप्राप्तेर्गौतमे विकुर्वंति हि ब्रह्मसामौक्तिहमात्रगवामयनएवेति धानंजय्यो निमित्तमते पत्ननियोगो द्वाराभ्यां मध्ये पृष्ठ्यपुरस्तात्पृष्ठ्ययोर्जामि च स्यात्सत्सूत्तमे त्रयस्त्रि७शद्रात्रे संतनिमानयो प्रज्ञात उत्तरस्त्र्यह इति व्यूढः समूढो वोभयवृत्तित्वात्समूढस्तु वासिष्टलोके पार्थक्लृप्तेस्प्रहः पंचाहा इति पृष्ठ्यस्तोमपंचाहाराणायनी पुत्रो हरुत्पत्तेर्लुथते वा एतत्षष्टमहरिति वासंबद्धप्रकृतिषु नोपपद्यते भिप्लवपंचाहानोतेम धानंजय्यशंबूपुत्रावृत्तेः समश्वलपःषदुहतंत्रे भिप्लवबृहंती च गृह्णात्युत्तमे त्रयस्त्रि७शद्रात्रेत्यार्थो यद्विश्वजितिछंदोमानुपयंतीति नित्याविरोधात्त्रयं यद्वचनश्चतुस्त्रि७शाभवंतीतिवत् ६

संवत्सरसंमितासूक्तमोभिषभिप्लवः शाक्वरवर्णवांत्संवत्सरसंमित-त्वाद्गो आयुरानंतर्येव य एव सातोमलोपप्रवृत्तेः संतानिसामा-त्वावृत्तिन्यायत्वात्पन्नसो श्वयावत्प्राप्तिलोप उत्तरेषामनभिप्राप्तेः फल-सामान्यश्रुतिमात्रं नकर्मसामाय जनित्रवासिष्टं त्वाष्ट्रीसामाभा-वाद्योमाभावःश्वसमतस्य मृज्यत्मानायाॱस्मसूहिकाभीवर्त्तुकालेयत-ल्लोकाछकल्पान्यं च नृत्वसामान्याद्वाष्टावशयाहिकास्तत्प्रयोगउत्तरे पन्नसि विकल्पःशाट्वरे वर्णसामतो लोपप्रवृत्तेर्यष्वसामायत्वसा-मावोभयतो लोपहर्शनादौत्तरपन्निकाणां गोआयुरानंतर्याच्च व्यूढे प्रष्टचेतन तु क्लृप्ताभीवर्त्तकालेये शाक्वरवणत्सोम्नचभिप्लवत्सक्सा-मतावत्तॱ संवत्सरत्क्लृप्ताः संवत्सरसंमिता इति तच्छास्त्रं काकुभ-समदशप्रथमवाक्त्वजभवदुद्वरतानुद्वारादुदुषंकवसप्तदशेभ्यो वा घ-र्जंभमिति चान्यत्र कारणापायाद्वोत्तरवदपेयत्पुनर्वाजदावर्य्यः रवलो-कमायतीति प्रत्यापादयन्नाश्वसूक्तं घृताकार्यं निमित्तस्तु समास-स्तत्तृवापात्तो यथाप्रकृतित्रिवृद्ध उद्वरत्युक्थानि पंचदशेभ्यः षोडशिन-मितिवैधृवीक्लृप्तिरुत्थ्यःषोडश्रयाद्वारमात्रॱ हि वृत्तेर्वायौक्ताश्च ह्यवि-ष्मते न चानत्थ्यमौन्नमाष्टादष्ट्रमुत्थ्यंत आनुष्टुभभागनिमित्तत्वा-न्नाम्नचधस्योत्थ्यंत इति चेन्नित्यं त्रयस्त्रिॱशांतेतैरश्व्यमन्यावनम्नाद्दृष्टं वोद्वॱशीयं वृत्तेर्ज्योतिष्टोमेन वा विक्लृप्तेनेत्यग्निष्टोमेन प्रकृतत्वाद्द्वा-मयनसॱस्थाविकारो वा ज्योतिश्चोदनाविशेषे तत्प्रकृतत्वाद्विश्वजिद-भिजितौ वेत्यैकाष्टौ प्रकरणगौरीवितविधिभ्यामहः प्रसंख्यामात्रं त्वौद्देशिकवाक्यव्यवाये लिंगजामिकल्पो न्नैकाह्ये ७

अनुष्टुभमुत्तमाॱ संपादयतीति स्तोत्रोत्तमाधर्म्मो मुख्यविराट्संपद्धां नृवोत्तमाधर्म्मो वोत्पत्यधिकारात्कुलामिनीवच्चतुरधिकाविराडिति चेदूनान्नरागायत्रीतिच तस्त्र ऊनास्तत्रैतत्संपद्यते पदप्रयरमासब्राह्मणं गौतमः प्रकरणादितो वा इति हि स्तोत्रीयातो विराट् श्रुतिस्त्रि-

वृत्पवमानातिरेकसंपत्तेश्चैतामन्नरसंपदं व्यंजनप्रायश्चित्तज्योतिष्टोम-विचाराः संपद्यंते न्नरेणां ततः प्रतिष्ठाप्यमित्यृवोवागुपवादात्कृत्स्नकार्यत्वं त्वनृतोपवादाद्वागतसंयोगान्नानंतेंगार्थस्तु कारयेत्संयोगाभावेऽपि वालखिल्यावत्करोति त्वंगार्थमौत्पत्तिकोत्पवन्यन्नवालखिल्याभावेन्य उत्थ्यांतउत्थ्यं छन्दोगाः काम्याः प्रकरणादनुष्टुब्वचनाच्च सौभरनाम्र्मेधयोस्वतिरात्रसंगः स्तदर्थस्तोत्रीयविधिस्तद्विषयो प्रकरणवद्विप्रतिषेधादेतोष्वेवप्रगाथेष्वित्येकछंदो न्यायत्वान्नोधसवद्बृहतीष्वग्निष्टोमांते च संपन्नोत्थादौ द्रव्यमात्रे च प्रगाथग्रहणे सामतौ धम्यन्नानात्वात्स्वाम्र्यां तेषां ययावामदेव्यस्पत्तित्यनुष्टुप्प्रपमागायत्र्यावुत्तरे इति न च धर्म्यं विकारो यथासर्वासु बृहतीष्विति बृहद्रथंतरसंयुक्तेषु वोपदेशा धर्मसु यथा यज्ञायज्ञीयस्य न्दवद्विवतिनित्यसंपत्कानि च व्यंजनात्पूहतादर्प्याच्च सर्वबृहतीवत्करावरथंतरत्रिषंधिगर्भिवारवंती येष्वेवं प्रायश्चित्तानि ज्योतिषोऽन्यत्र हेतुसामान्यान्निसंपदावृत्तेरनुक्लृप्तिमननुक्लृप्तेषु संपदाद्धासवृद्वाज्यतिष्टोमे हि निदर्शन७ सर्वक्रवर्थमननुक्लृप्तिमाकार्या अत्रगीतत्वाद्विध्यतरयाच्च कारणकृतं त्वेव स्यान्न तु संपदर्थान्यमिंतत्वात्सर्वछंदःसु सिद्धत्वाद्विषगछदसुवाप्रतिक्लृप्तेः प्रायणीयव्रतछंदोमंतत्स्वनुकल्पो ज्योतिषि सपदर्थः सपदर्थः ८

वर्णाकल्पायथासंयोगप्रथमयज्ञाश्च तद्व्यपदेशात्प्रमाणो समाप्तेस्तु वै यजना अतत्प्रकरणात्वाच्च व्यपदेशो नित्यसंवृत्तिनाव्यंजनेन ग्रामकामाश्रेष्ठ्यकामव्यक्तेश्चैतावेव पूर्वा च प्रवृत्तिश्च छंदोमेषु स्यादव्यभिचाराद्विर्द्विष्पंदमभ्यस्यन्नित्यमनुष्टुप्संपदेऽनुष्टुप्प्रकृतित्वात्तु प्रगाथं न्यायो द्विर्द्विष्पदमिति वा सिद्धं च प्रवहीः समूहादवलोपन्यायाव्यूढाच्च सत्सुवामदेव्ययज्ञायज्ञीयत्रिष्टुप्जगत्यभावो वामदेव्ययज्ञायज्ञीयसंचारश्च स्यात्सवनप्रबर्हा अग्निष्टोमास्तन्मध्यत्वादुक्थानि

रात्रासु सवनकृत्स्नश्रुतेर्न च द्वे स७स्थ्यंतेषाढस७पद्व७स्थातिक्रमः षडुहविचाराःसन्निकाहीनिकास्तच्छब्दलिंगश्रुतेर्यावदुभयशब्द्यं वौ-भयमतोन्यत्र प्रकृतिःमासात्रिकिलिंगात्सत्रशब्दलिंगमध्यत्वाच्च पैं-गिरब्राह्मणं तु गवामयनप्रकरण एताद्विधायतैरयनम् ९

मासि पृष्ट्यं वेति विकल्पयति प्रत्यक्षाणि पृष्टानीति रेवती षष्टानि प्रात्यक्षात्प्रख्यापृष्टउत्तरश्चतुरह इति वारवंतीय षष्टष्विति चेद्रेवती-भावाद्रेवतीना७ रसो यद्वारवंतीयमिति श्चपारोक्ष्यात्परोक्षपृष्टे वो-पदेशात्प्रत्यक्षवच्च रेवतीनासु द्वारपरोक्षाणि मध्यंदिनेष्टितितद्भूतवि-कल्पः षष्टे तु दार्ढच्युत रेवतीलोका तु क्लृप्ते वारवंतीय च पृष्वेषु परोक्षार्थ्येतायाः कल्पो विपर्यासबृहद्रथंतरे पृष्टे इति सस्तोत्रीये अन्यावचनात्पूर्वशब्दग्रहणाद्वा स्वपरोक्षयास्ततश्च देशः साममात्र-ग्रहणाद्वाषाडिकेषूत्तरस्य चतुरस्य परोक्षणि मध्यंदिनेषु बृहतीष्विति बृहद्रथंतरपरोक्षेतात्पृष्ठ्याद्बहुवर्ग्रहणमिति चेद्यथा स्तोमसंपद्वा-दोतिजगतीष्विति चेद्रूपादीनि वा तद्देशपरोक्ष्यात्परोक्षपृष्टे चोपदेशा-दनुगृहीतपृष्टे वैव७ सर्वपरोक्षाणि तु पारोक्षादेवप्रकृतिक्लृप्रं वै रूपादिषु तथा च पूर्वोत्तरेष्वनुगृहीतष्ट इति चैवं पृष्ट उत्यन्य-संभवाःप्रयोगवादश्च स्यान्न च गायत्रीष्विति बृहद्रथंतरपरस्तदुपरि-ष्टाज्योतिवत्प्रत्यक्षेषुष्टस्तोत्रीयेष्टिति त्रिवान्यं वसेन हि मुक्तस७शयो व्यतिरेकस्वैमस्य परोक्षो वा वान्यत्वात्प्रत्यक्षवद्वा प्रायदुभयपरोक्षे वा तु क्लृप्रे १०

आपर्क्यप्रांक्योपाक्येषु गर्भिवद्धर्माः प्रथमपर्यायः स्तोत्रीये प्रवृत्ते-र्विष्टुतीनां तृचाधिकारत्वाच्च प्रत्यक्षे वा प्रकृतेः प्रत्यक्षबलीयस्त्वा-च्चाविशेषश्रुतेस्तु प्रत्यक्षपरोक्षोभयभावात्स्वासु कृतानाञ्च डथय एव संवत्सरेष उहंस्य पृष्टतो विवारास्ते विश्वजित इति तु होतृषामाणि

कृतदेशानि प्रकृतौ तोय्या७ स्थाने तस्य तस्या षडहस्य होतृ- ष्टान्यनुकल्पयेद्यथा भक्तिकृतत्वाद्धि पृष्टादेशस्य विवारमात्रातिदेशः पवमानानुकल्प्यानि च पृष्टशब्दसामान्यादिति चेत्प्रकृतौ तांन्य- देश्यक्लृप्तिस्तस्मि७ होतृषामाविशेषातिदेशात्तु पार्ष्टिकाना७ सर्वाणि होतृपृष्टापन्नवतछब्दश्रुतिनान्यादत्रास्यानपृष्टं तथा च विश्वजिति तस्मात्पवमानानुकल्पानि माध्यंदिनार्भवयोरनुकल्पयेद्यथा स्वं बृह- द्रथंतरपृष्टानुक्लृप्तौ प्रकृतिपृष्टःकृतत्वाद्ब्रह्मसामपृष्टानुक्लृप्तौ महावै- ष्टभं पृष्टान्यनुप्रयुज्येर७ स्वद्देशत्वात्तत्र पवमानयोर्वानुकल्पतद्देशत्वा- त्तद्ब्रह्मसामत्वात्तु ब्रह्मसामपृष्टेऽनयत्र पवमानेभ्यस्तदर्थवैष्टभं कृत- त्वात्पृष्टानि पवमानावापेषु पर्यायसंयुक्तानि न पवमान इति चेन्न रथंतरं नान्यानि होतृपृष्टात्तथा वोभयसामसु ११

भरतज्योतिद्वादशाहाबकर्मातरमविशेषात्कर्मान्तरं वा नानाचोदित- त्वाद्यथा ते संत इत्यविकारोऽभिजिद्वदजामिनिमित्तप्राप्तेर्वा यथो- त्पत्तिपौंडरीके चैवमानुष्टुभेषु तृचेष्टैंद्रेषु हरिवत्सुसामन्येष्वित्यौ- होत्ववायः पञ्चगाणं वा यदि सामान्यानविद्येरन्नप्यसामान्यासु स्पुर्यद्युहरिवत्यो न विद्येरन्नप्यहरिकास्वेव स्युरिति ह्यनियोगो विराट्संपन्नो व्यूढो विकाराश्रुतेरभ्यासवतस्त्वाष्ट्रीसाम्नोऽन्यत्र पार्थ- लोकामुतकृदोस्तथारूपाऽग्निष्टोमसामपार्थवामदेव्यत्तद्देशपरामर्शा- द्धवानुरांत इहवद्वामदेव्य७ षष्टे विभक्त्यर्थेनैवं वोत्तरे समूढस्य रूपेण समूढ इति सांवत्सरिको ज्योतिष्टोमसमूढत्वादथापरे चत्वारो भवंतीति नानापृष्टव्यूढाः काम्याप्रकरणादिंद्रस्तुत्वाकर्मांतरमविशे- षात्सप्तमप्रागाथिकविशेषो वा यथा स्तोमं प्रथममहः स्तथास्तो- मोय७ सर्वो दशरत्र इति कृत्स्नधर्मो विकाराश्रुतेः प्राग्वामानसत्तत्र स्तोमव्यत्ययवृत्तेर्नमानसेन्यदर्शन७ स्तोमस्य तमस्य तथा च संपत्संपत्तिर्यथादशममिति न मानसिको यथा हि मानसे नान्य एमेष

नान्यत्र कर्त्तव्यस्तु प्राक् स्तोमव्यत्ययवृत्तेर्न तु मानसेऽन्यो व्यतिरेका-
त्रिकत्रयस्त्रिꣳशौ सकृच्चतुर्विꣳशः प्रकृतत्वात्कृतस्थानत्वाद्वा त्रय-
स्त्रिꣳशोऽग्निष्टोमसाम्नस्त्रिकः परस्थानत्वात्परेष्वग्निष्टोमेंत्ययो स्तोम-
योज्यत्वाद्वा स्तोमयोगः प्रकृतिसंपन्नित्यः प्रकृतिसंपन्नित्यः १२

इति श्रीकल्पानुपदे द्वितीयप्रपाठकः समाप्तः २ श्रीरस्तुः

Reference:
This text is a transcript of the manuscript of Kalpānupada Sūtra deposited in the Oriental Collection, Bodleian Library, Oxford University, in folios 20-32 of MS. Wilson 375.

Manuscript No. 375 is described on pp. 377-378 of *Catalogi Codicum manuscriptorum Bib. Bodleianae, Pars Octava: Codices Sanscriticus*, Comp. Th. Aufrecht, Oxon ii. 1884. Ref. Hitvākya Sūtra.